दस्तसाध्यभवनक्रियाभिन्नपच्यादिक्रियाकारकत्वादोदनादि नानाकारकमिति भावः ॥ ननु हरतेः कारणमात्रापेक्षत्वेन न दण्डेन व्यपेक्षेत्यत्राह—**अनेनेतिपदेनेति** । अत एवास्ति सर्पिष्पिबानेनं पय इत्यादौ षत्वम् ॥ पचौदनमित्यत्र संबन्धाभावात्कथं व्यपेक्षेत्यत आह—**भाविन इति** ॥ ओदनं पचेति पाठेप्योदनद्वारिका पचिनापि व्यपेक्षेति बोध्यम् । अर्थयोराकाङ्क्षैव व्यपेक्षेति तात्पर्यम् ॥

(आक्षेपभाष्यम्)

**किमुच्यते—नानाकारकादिति, यदा तेनैवासज्य ह्रियते ॥**

(प्रदीपः) **तेनैवासज्येति** । ततश्च दण्डस्य हरणं प्रति कारकत्वान्नास्ति नानाकारकत्वमिति प्रश्नः ॥

(समाधानभाष्यम्)

**नापि ब्रूमः—अन्येनासज्य ह्रियत इति ॥ किं तर्हि? शब्दप्रमाणका वयम् । यच्छब्द आह, तदस्माकं प्रमाणम् । शब्दश्चेह सत्तामाह—'अयं दण्डः' अस्तीति गम्यते । स दण्डः कर्ता भूत्वान्येन शब्देनाभिसंबध्यमानः करणं संपद्यते । तद्यथा—कश्चित्कंचित्पृच्छति—'क देवदत्तः' इति । स तस्मायाचष्टे—'असौ वृक्षे' [इति 'कतरस्मिन्'] 'यस्तिष्ठति' इति स वृक्षोऽधिकरणं भूत्वाऽन्येन शब्देनाभिसंबध्यमानः कर्ता संपद्यते ॥**

(प्रदीपः) **अयं दण्डोस्तीति** । यत्रान्यत् क्रियापदं न श्रूयते तत्रान्तरङ्गत्वादस्तिक्रियैव प्रतीयते । ततोस्तिक्रियायां दण्डस्य कर्तृत्वाद्भवत्येव नानाकारकत्वमित्यर्थः ॥ **क देवदत्त इति** । यदा बहवः पुरुषा दूरस्था भवन्ति तदैते प्रश्नोत्तरे ॥ **यस्तिष्ठतीति** । यदान्ये निपातिता वृक्षाः, एकस्तूर्ध्वस्तदा विशिष्टवृक्षाधिकरणत्वेन देवदत्तः प्रतिपाद्यते ॥

(उद्द्योतः) **एकस्तूर्ध्व इति** । तिष्ठतेश्चोर्ध्वदेशसंयोगोप्यर्थ इति भावः ॥

(११९६ दूषणान्तरवार्तिकम् ॥ ७ ॥)

## ॥ * ॥ प्रचये समासप्रतिषेधः ॥ * ॥

(भाष्यम्) **प्रचये समासप्रतिषेधो वक्तव्यः । राज्ञो गौश्चाऽश्वश्च पुरुषश्च राजगवाश्वपुरुषा इति॥**

(प्रदीपः) **प्रचय इति** । अनेकस्मिन् संबन्धिनि विवक्षित इत्यर्थः । तत्र गो राज्ञापि सामर्थ्यमश्वपुरुषाभ्यामपि । तत्र युगपद् द्वौ द्वन्द्वतत्पुरुषौ प्राप्नुतः । पूर्वं वा तत्पुरुषः पश्चाद् द्वन्द्वः । विप्रतिषेधाभावाच्च न परत्वेन व्यवस्था भिन्नसमुदायविषयत्वात् संज्ञाद्वयस्य । तत्र षष्ठीतत्पुरुषे सति **गोरतद्धितलुकीति** टच् प्राप्नोति । अर्थश्च भिद्यते राजगवाश्वपुरुषा इत्युच्यमानेऽश्वपुरुषयो राज्ञा संबन्धो न प्रतीयेत[1] ॥

(उद्द्योतः) भाष्ये—**प्रचयेति** । व्यपेक्षावादेपि समुदायेन व्यपेक्षायामवयवातिरिक्तसमुदायस्यावयवानालिङ्गितस्य निरूपयितुमशक्यत्वेनावयवैरपि व्यपेक्षास्त्येवेति तन्मतेऽप्ययं दोषस्तदवस्थ इति भावः ॥ ननु प्रचयशब्दस्य समाहारपर्यायत्वेन समाहारे समासनिषेधेपीतरेतरयोगे स दुर्वार इत्यत आह—**अनेकस्मिन्निति** । प्रचय आधिक्यमिति भावः ॥ ननु युगपदेकस्यानेकसंबन्धानुपपत्तेः कथं युगपत्समासद्वयप्रसङ्गोऽत आह—**तत्रेति** ॥ **गो राज्ञापीति** । समुदायव्यपेक्षायामवयवव्यपेक्षायाः समुदायैकार्थीभावेऽवयवैकार्थीभावस्य च दुर्निवारत्वादिति भावः । अश्वादिभिश्च साहित्यसत्त्वादेव स इति बोध्यम् ॥ **पूर्वं वा तत्पुरुष इति** । प्रथमातिक्रमे कारणाभावादिति भावः ॥ ननु परत्वाद् द्वन्द्व एव भविष्यतीति न दोषोऽत आह—**विप्रतिषेधेति** ॥ आकडारीयत्वेप्यविरोधमुपपादयति—**भिन्नसमुदायेति** ॥ **टजिति** । तथा च स्त्रीत्वे ङीप् स्यात् । किं च द्वन्द्वोत्तरतत्पुरुषेऽवङो वैकल्पिकत्वेन राजगोश्वपुरुषा इत्यपीष्यते तन्न स्यादिति भावः ॥

(११९७ द्वितीयदूषणबाधकवार्तिकम् ॥ ८ ॥)

## ॥ * ॥ समर्थतराणां वा ॥ * ॥

(व्याख्याभाष्यम्)

**समर्थतराणां वा पदानां समासो भविष्यति ॥ कानि पुनः समर्थतराणि? । यानि द्वन्द्वभावीनि ॥ कुत एतत्? । एषां ह्याशुतरा वृत्तिः प्राप्नोति । तद्यथा—'समर्थतरोयं माणवकोऽध्ययनाय' इत्युच्यते 'आशुतरग्रन्थः' इति गम्यते ॥**

(प्रदीपः) **समर्थतराणां वेति** । शक्ततराणामित्यर्थः ॥ **एषां ह्याशुतरेति** । प्रथमा प्रातिपदिकार्थमात्रे विधीयमाना न किंचिद्बाह्यं वस्तु अपेक्षते षष्ठी तु बाह्यसंबन्ध्यपेक्षत्वाद्बहिरङ्गा । तत्रान्तरङ्गप्रथमानिमित्तः पूर्वं द्वन्द्वो भवति । **असिद्धं बहिरङ्गमन्तरङ्गे** इति द्वन्द्वे कर्तव्ये षष्ठीसमासस्यासिद्धत्वात् ॥ **आशुतरग्रन्थ इति** । आशु प्रतिपत्तव्यो ग्रन्थः आशुतर उच्यते ॥

(उद्द्योतः) **समर्थतराणामिति** भाष्यं नैकार्थीभावपरं तत्र तरतमायोगादत आह—**शक्तेति** ॥ समर्थतरत्वे आशुतरत्वं हेतुः, तस्त्वमन्तरङ्गत्वादिति व्युत्पादयति—**प्रथमेत्यादिना** ॥ आशुतरग्रन्थ इति बहुव्रीहिः । एवं चाशुतरं कार्यप्राप्तिमत्त्वमेव शक्ततरत्वं बोध्यम् ॥

(व्याख्यान्तरभाष्यम्)

**अपर आह—समर्थतराणां वा पदानां समासो भविष्यति ॥ कानि पुनः समर्थतराणि? । यानि द्वन्द्वभावीनि । कुत एतत्? । समानविभक्तीन्येतानि[2], अन्यविभक्ती राजा । भवति विशेषः स्वस्मिन् भ्रातरि पितृव्यपुत्रे च ॥**

(प्रदीपः) **एतानीति** । तुल्यजातीयत्वं व्यपेक्षायामेकार्थीभावे च प्रत्यासन्नतरं कारणमित्यर्थः ॥

[1] 'प्रतीयेत' ॥

[2] 'एतानि हि समानविभक्तीनि' ॥

(उद्योतः) तुल्येति। तुल्यजातीयैः प्रथमं झटिल्येकार्थीभावस्य व्यपेक्षाया वा कल्पनात्पूर्वं द्वन्द्वे ततः षष्ठीतत्पुरुष इत्यर्थः॥

(११९८ द्वितीयदूषणबाधकवार्तिकान्तरम्॥ ९॥)

**॥ * ॥ समुदायसामर्थ्याद्वा सिद्धम्॥ * ॥**

(व्याख्याभाष्यम्)

**समुदायसामर्थ्याद्वा पुनः सिद्धमेतत्। समुदायेन राज्ञः सामर्थ्यं भवति, नावयवेन॥**

(प्रदीपः) **समुदायसामर्थ्यादिति।** समुदायद्वन्द्वार्थं प्रति राजा विशेषणत्वेनोपात्त इति तेनैव राज्ञः सामर्थ्यं नावयवेनेत्यर्थः॥

(उद्योतः) नावयवेनेति। प्रत्येकमवयवैरनुमीयमानस्य सामर्थ्यस्य सत्त्वेपि साक्षान्नेत्यर्थः॥ एवं च तस्य समुदायेन सामर्थ्यात् पूर्वं तत्समुदायप्रयुक्तो द्वन्द्व इति भावः॥ ननु द्वन्द्वे समुदायेनेव तदवयवगोशब्देनापि राजपदार्थस्य सामर्थ्यसत्त्वात्समुदायस्यापि षष्ठीतत्पुरुषसंज्ञा स्यादिति टच्प्रसङ्ग इति चेन्न। **नावयवेने**त्यस्याश्वपुरुषसापेक्षेणेति शेषेणादोषात्।

(व्याख्यान्तरभाष्यम्)

**अपर आह—**

(व्याख्यान्तराय न्यासान्तरम्)

***समर्थतराणां वा समुदायसामर्थ्यात्*॥**

(व्याख्याभाष्यम्)

**समर्थतराणां वा पदानां समासो भविष्यति॥ कुत एतत्?। समुदायसामर्थ्यादेव॥**

(प्रदीपः) **अपर आहेति।** अत्र पक्षे समुदायसामर्थ्यं समर्थतरत्वे हेतुः। समुदायसंबन्धे चावयवस्याप्यनुमीयमानः संबन्धोऽस्तीति तदपेक्षः प्रकर्षप्रत्ययः॥

(उद्योतः) तदेव स्फुटं व्याख्यानान्तरव्याजेनाह—**अपर आहेति**॥ राज्ञः समुदायेनैव सामर्थ्यात्तरपो वैयर्थ्यमाशङ्क्याह—**समुदायेति**॥

(आक्षेपभाष्यम्)

**अस्मिन्पक्षे 'वा' इत्येतदसमर्थितं भवति॥**

(प्रदीपः) **अस्मिन् पक्षइति।** एकस्मिन् साध्ये हेतुद्वयोपादाने विकल्पो भवति इह त्वन्यत्रान्यो हेतुः॥

(समाधानभाष्यम्)

**एतच्च[1] समर्थितम्॥ कथम्?। नैव वा पुनरत्र राज्ञोऽश्वपुरुषावपेक्षमाणस्य गवा सह समासो भवति॥ कथं तर्हि गोः राजानमपेक्षमाणस्याश्वपुरुषाभ्यां सह समासो भवति?॥ प्रधानमत्र तदा गौर्भवति। भवति च प्रधानस्य सापेक्षस्यापि समासः॥**

(प्रदीपः) **एतच्चेति।** सापेक्षत्वेनासामर्थ्याद् राज्ञो गवा समासो न भवतीत्यस्यार्थस्य वाशब्दः प्रतिपादकः॥

(उद्योतः) इत्यस्यार्थस्येति। विशेषणसापेक्षत्वे इव विशेष्यान्तरसापेक्षत्वमप्यसामर्थ्यप्रयोजकम्। एवं चेदं पक्षद्वयेप्यनावश्यकमिति भावः॥ भाष्ये—**प्रधानमत्रेति।** अवयवसंख्यया तत्र समूहस्य संख्यावत्त्वाश्रयणात्तस्य प्राधान्यमिति भावः॥

(वाक्यलक्षणाधिकरणम्)

(११९९ वाक्यलक्षणवार्तिकम्॥ १०॥)

**॥ * ॥ आख्यातं साव्ययकारकविशेषणं वाक्यम्॥ * ॥**

(व्याख्याभाष्यम्)

**आख्यातं साव्ययं सकारकं सकारकविशेषणं वाक्यसंज्ञं भवतीति वक्तव्यम्॥**
**साव्ययम्—उच्चैः पठति नीचैः पठतीति॥**
**सकारकम्—ओदनं पचति॥**
**सकारकविशेषणम्—ओदनं मृदु विशदं पचति[2]॥**

(प्रदीपः) **आख्यातमिति।** नानाकारकान्निघातादिनिवृत्तये क्वचित् प्रवृत्तये च समानवाक्ये निघातयुष्मदस्मदादेशा वक्ष्यन्ते। तत्र लौकिकवाक्यग्रहणनिषेधार्थं वाक्यं परिभाष्यते॥ अव्ययकारकविशेषणानि प्रत्येकं समुदितानि चाश्रीयन्ते यथा वृषलैर्न प्रवेष्टव्यम्। **अङ्कुर्वाङ्गुर्भ्युवार्षै**पीति। आख्यातमिति चैकत्वं विवक्ष्यते। लक्षणविधानसामर्थ्यात्। तथा च **तिङ्ङतिङ** इत्यत्र वक्ष्यते **तिङ्प्रतिषेधानर्थक्यं च समानवाक्याधिकारादिति।** भवति पचतीत्यादौ सत्यपि साध्यसाधनभावे आख्यातयोर्द्वित्वात् समानवाक्यत्वाभावान्निघाताप्रसङ्गात्॥ **उच्चैरिति।** यद्यप्यव्ययं कारकं विशेषणं च तथापि प्रपञ्चार्थमस्योपादानम्। तथा च वक्ष्यते—**आख्यातं सविशेषणमित्येवेति**॥

(उद्योतः) वाक्यलक्षणकरणस्यासंगतिमाशङ्क्याह—**नानेति**॥ **क्वचिदिति।** नद्यास्तिष्ठति कूले इत्यादौ॥ अत्र ह्यसामर्थ्यान्न प्राप्नोति यथा कथंचित्सामर्थ्यग्रहणेतु—अयं दण्डो हरानेनेलादावपि स्यादिति भावः॥ **लौकिकेति।** सुप्तिङन्तचयो वाक्यमित्यादि॥ **लक्षणविधानेति।** निष्क्रियवाक्याभावस्य लोकव्युत्पत्तिसिद्धत्वादिति भावः॥ अव्ययग्रहणवैयर्थ्यमाशङ्कते—**यद्यप्यव्ययमिति।** सगच्छतीत्यादौ कारकम्। उच्चैः पठतीत्यत्र विशेषणं क्रियाविशेषणत्वादत्रापि कर्मत्वं वा॥

(१२०० वाक्यलक्षणवार्तिकम्॥ ११॥)

**॥ * ॥ सक्रियाविशेषणं च॥ * ॥**

(व्याख्याभाष्यम्)

**सक्रियाविशेषणं चेति वक्तव्यम्। सुष्ठु पचति दुष्ठु पचतीति॥**

1 'एतस्मिन्'॥

2 'मृदु विशदमोदनं'॥

**( प्रदीपः ) अद्विप्रभृत्युपसर्गस्येति वक्तव्यमिति ।** इह[1] संख्यान्तरोपजने आश्रयाविनाशेऽपि पूर्वसंख्याविनाशात्तद्वाचि[2]शब्दाप्रवृत्तिरिति भावः ॥

**( उपसंख्यानाक्षेपभाष्यम् )**

**तत्तर्हि वक्तव्यम् ?**

**न वक्तव्यम् । यत्र त्रिप्रभृतयः सन्ति द्वावपि तत्र स्तः, तत्राद्व्युपसर्गस्येत्येव सिद्धम् ॥**

**( प्रदीपः ) यत्र त्रिप्रभृतय इति ।** वस्तुसद्भावमाश्रित्य परिहारः । 'अद्व्युपसर्गस्य'इति च प्रसज्यप्रतिषेधो वाक्यभेदेनाश्रीयते । पर्युदासाश्रयणे ह्यनुपसर्गस्य ह्रस्वो न स्यात् ॥

**( उद्द्योतः )** प्रसज्यप्रतिषेधे वाक्यभेदासमर्थसमासापत्तावपि लक्ष्यानुरोधात्स आश्रीयत इत्याह—**पर्युदासाश्रयण इति ।** द्व्युपसर्गसदृशस्य सोपसर्गस्यैव ग्रहणापत्तेरिति भावः ।

**( समाधानभाष्यम् )**

**न वा एष लोके संप्रत्ययः । न हि द्विपुत्र आनीयतामित्युक्ते त्रिपुत्र आनीयते ।**

**तस्मादद्विप्रभृत्युपसर्गस्येति वक्तव्यम् ॥**

**( प्रदीपः ) न वै एष इति ।** संख्याशब्दानामेष स्वभावो यत्संख्यान्तरस्योत्तरस्य गौणस्य मुख्यस्य वा विषये न प्रवर्तन्ते । तथा चोक्तम्—'एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात्सिद्धम्' इति । 'नैधेयः' इति च पूर्वविधिग्रहणस्य प्रत्युदाहरणमुपन्यस्तम्, स्थानिवद्भावे सति त्र्यच्त्वाद्व्यच्त्वाभावात्तदाश्रयो ढक् न स्यादिति ॥

**( उद्द्योतः )** मुख्यस्योत्तरसङ्ख्यान्तरस्य विषये पूर्वसङ्ख्याया अप्रवृत्तौ भाष्ये दृष्टान्त उक्तः, गौणविषये दर्शयति—**तथा चोक्तमिति ।** 'अइउण्'सूत्रे । तत्र ह्यकारादीनामेकत्वपक्षे 'घटेन तरति-घटिकः' इत्यत्र द्व्यज्लक्षणष्ठनोऽप्राप्तिमाशङ्क्यायं परिहार उक्तः ॥ **स्थानिवद्भावे सतीति ।** निपूर्वाद्धाञः किप्रत्यय आतो लोपे तस्य स्थानिवत्त्वेन त्र्यच्त्वं स्यादिति भावः ॥ **तदाश्रय इति ।** द्व्यच्त्वाश्रय इत्यर्थः ॥

---

**( १३०० विधिसूत्रम् ॥ ६ । ४ । ३ आ. १३ )**

## ३०९८ घसिभसोर्हलि ॥ ६।४।१०० ॥

**( प्रदीपः )** अचीत्यधिकाराद्धलि न प्राप्नोतीति हल्ग्रहणं क्रियते । तदुपादाने चाचि न प्राप्नोतीति चकारोऽच्सम्बन्धार्थः क्रियते । तत्राज्ग्रहणस्येहानधिकारादेव सर्वत्र लोपः सिध्यतीति 'हलि च'इति न वक्तव्यम् । 'अन्यत्रापि'इति वचनाद्वार्तिककारश्चकारं न पपाठेति लक्ष्यते ॥

**( उद्द्योतः )** हल्ग्रहणप्रत्याख्यातृवार्तिकाशयमाह—**तत्रेति ॥ अनधिकारादेवेति ।** व्याख्यानादेवाधिकारनिवृत्तिः सिद्धेति भावः ॥ **अन्यत्रापीति वचनादिति ।** सूत्रोक्तविषयादन्यत्रापीति तदर्थः । स च चकाराकरण एवोपपद्यत इत्यर्थः ॥

**( ६५७६ हलिग्रहणप्रत्याख्यानवार्तिकम् ॥ १ ॥ )**

### ॥ * ॥ हल्ग्रहणानर्थक्यमन्यत्रापि दर्शनात् ॥ * ॥

**( भाष्यम् ) हल्ग्रहणमनर्थकम्[3] ।**

**किं कारणम् ?**

**अन्यत्रापि दर्शनात् । अन्यत्रापि हि लोपो दृश्यते—अग्निर्वनानि[4] वप्सति, शरावे वप्सति[5]—इति ॥**

**( प्रदीपः ) वप्सतीति ।** एकवचने प्राप्ते व्यत्ययेन झिः, श्लौ द्विर्वचनम् । 'अदभ्यस्तात्'इत्यदादेशः, उपधालोपः, 'खरि च'इति चर्त्वम् । अत्र चान्तरङ्गत्वादुपधालोपात् पूर्वं द्विर्वचनं क्रियते । यदि तु झावेव पूर्वं लोपः स्यात्ततो द्विर्वचनं न स्यात् ॥

**( उद्द्योतः ) एकवचन इति ।** अग्नेरेकस्य कर्तृत्वादिति भावः ॥ **अन्तरङ्गत्वादिति ।** यद्यप्युपधालोपः परो नित्यश्च तथापि[6] ह्रस्वमात्रापेक्षत्वाद्द्वित्वमन्तरङ्गम्, ङित्प्रत्ययापेक्षत्वाद्बहिरङ्गो लोप इत्यर्थः ॥ **द्विर्वचनं न स्यादिति ।** अनच्कत्वात्, लोपस्य द्वित्वनिमित्ताज्निमित्तत्वाभावेन स्थानिवत्त्वाभावाच्च । द्वित्वे कृते परत्वान्नित्यत्वाच्चादेश उपधालोपानापत्तिरिति भावः ॥

---

**( १३०१ विधिसूत्रम् ॥ ६ । ४ । ३ आ. १४ )**

## ३०९९ हुझल्भ्यो हेर्धिः ॥ ६।४।१०१ ॥

**( ध्यादेशाधिकरणम् )**

**( वार्तिकावतरणे प्रतिषेधोपसंख्यानभाष्यम् )**

**इटः प्रतिषेधो वक्तव्यः । रुदिहि, स्वपिहि । झल इति धित्वं प्राप्नोति ॥**

**( प्रदीपः ) रुदिहीति ।** शब्दान्तरप्राप्त्या द्वयोरप्यनित्यत्वात्परत्वादिटि कृते पुनः प्रसङ्गविज्ञानाद्धित्वप्रसङ्गः ॥

**( ६५७७ प्रतिषेधानर्थक्ये बोधकवार्तिकम् ॥ १ ॥ )**

### ॥ * ॥ हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः ॥ * ॥

**( भाष्यम् ) हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ।**

---

१ इह—समुपाभिच्छाद इत्यत्र ॥

२ तद्वाचिशब्दाप्रवृत्तिः—द्व्युपसर्गवाचिशब्दाप्रवृत्तिः ॥

३ 'हल्ग्रहणमनर्थकमन्य' इति च. छ. झ. पाठः ॥

४ 'अग्निस्तृणानि वप्सति' इति झ. छ. पाठः ॥

५ 'स शरावप्सतीति' इति ट. पाठः । 'शरावे वप्सति चरुः' इति छ. च. झ. पाठः ॥

६ 'तथापि ह्रस्वमात्रा' इति झ. ढ. पाठः, स प्रामादिकः ॥

**धित्वं कस्मान्न भवति ?**

**हलधिकारात् । प्रकृतं हल्ग्रहणमनुवर्तते ।**

**क्व प्रकृतम् ?**

**'घसिभसोर्हलि' ( १०० ) इति ।**

**तद्वै सप्तमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।**

**तद्वै तत्र प्रत्याख्यायते, प्रत्याख्यातं सद्यया विभक्त्या निर्दिश्यमानमर्थवद्भवति तया निर्दिष्टमिहानुवर्तते ॥**[1]

( उद्योतः ) भाष्ये—तद्वै तत्र प्रत्याख्यायत इति । पूर्ववाक्ये 'हलि'इत्यस्यानुपयोगेन सप्तम्यर्थे सप्तम्यां प्रमाणाभावेन षष्ठ्यर्थे इयं सप्तमीति भावः ॥

( प्रकारान्तरेण प्रतिषेधानर्थक्यबोधकभाष्यम् )

**अथवा—'हुझल्भ्यः' इत्येषा पञ्चमी 'हलि'इति सप्तम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' (१।१।६७) इति ॥**

**( प्रदीपः ) अथवेति ।** यद्यपि सप्तम्यचरितार्था तथापि 'हुझल्भ्यः' इत्यनया पञ्चम्याऽचरितार्थया 'हेः'इत्येतदनुगुणा षष्ठी प्रकल्प्यते । ननु षष्ठी प्रक्लृप्तौ तदादिविधेर[2]सम्भवः । 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति ह्युच्यते । नैष दोषः । हल्ग्रहणानुवृत्तिसामर्थ्यात् हलन्तत्वासम्भवाच्च तदादिविधिर्विज्ञास्यते ॥

(उद्योतः) 'अथवा'इति पक्षेऽप्ययमेवार्थः प्रकारान्तरेणोच्यत इत्याह—यद्यपीति ॥ ननु द्वयोरप्यचरितार्थयोः पञ्चम्येव कल्पिका कुत इत्यत आह—हेरित्येतदनुगुणेति । हेरित्यस्य विशेषणाकाङ्क्षायां तेनैव हल्ग्रहणस्य संबन्धो युक्त इत्यर्थः । द्वयोरचरितार्थयोः परत्वात् 'तस्मादित्युत्तरस्य'इत्यस्यैव प्रवृत्तिरिति वक्तुं युक्तम् ॥ हल्ग्रहणेति । हल्ग्रहणानुवृत्तेः फलान्तराभावाद्धेरित्यनेन सम्बन्धे तदन्तविध्यसंभवात्तदादिविधिसिद्धिरित्यर्थः। वस्तुतः स्वरूपसत्सप्तम्येव तन्निमित्तम् । अत एव 'तस्मान्नुडचि'इत्यादौ तदादिविधिः । षष्ठीं प्रकल्पयिष्यतीत्यस्य—षष्ठ्यर्थे सप्तमीं कल्पयिष्यतीत्यर्थ इत्याहुः ॥

( प्रकारान्तरबोधकभाष्यम् )

**अथवा—'निर्दिश्यमानस्यादेशा भवन्ति'इत्येवं न भविष्यति ।**

**यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?**

**इटा व्यवहितत्वात् ॥**

**(प्रदीपः) अथवेति ।** यत् षष्ठ्या निर्दिश्यते तस्यैवादेशः । सागमकस्त्वागमानामव्यभिचाराच्छब्दान्तरे श्रूयमाणे प्रतीयते न तूच्चार्यत इति तस्यादेशाभावः ॥

**यस्तर्हीति ।** आगमं विहाय हि शब्दस्यादेशो भवत्वित्यर्थः ॥

**इटेति ।** 'तस्मादित्युत्तरस्य'इति वचनादनन्तरस्यैव षष्ठ्या[3] कार्येण वा भाव्यम् । तत्र यो निर्दिष्टो नासावनन्तरः, यश्चानन्तरः सागमको नासौ निर्दिष्ट इति धित्वाभावः ॥

(उद्योतः) ननु सागमोऽपि निर्दिश्यत एव, इटस्तदवयवत्वादत आह—सागमकस्त्विति । शब्दान्तरे श्रूयमाणे सति 'यदागमाः' इति परिभाषया प्रतीयत इत्यर्थः ॥

अनन्तरस्यैव षष्ठ्येति । पञ्चमीनिर्देशेऽनन्तरस्यैव षष्ठी प्रकल्प्येति सूत्रार्थ इति भावः ॥ पञ्चमीनिर्देशेऽनन्तरस्यैव कार्यं भवतीति सूत्रार्थमाश्रित्याऽऽह—कार्येण वेति । षष्ठ्या कार्येण भाव्यमिति पाठे षष्ठीबोधितकार्येणेत्यर्थः ॥

( प्रकारान्तराक्षेपपरिहारभाष्यम् )

**यद्येवं भिन्धकि छिन्धकीत्यत्र धित्वं न प्राप्नोति ।**

**एवं तर्हि[4] धित्वे कृतेऽकज्भविष्यति ।**

**इदमिह सम्प्रधार्यम्—धित्वं क्रियतामकजिति, किमत्र कर्तव्यम् ?**

**परत्वाद्धित्वम् ।**

**नित्योऽकच् । कृतेऽपि धित्वे प्राप्नोत्यकृतेऽपि ।**

**अकजप्यनित्यः । अन्यस्य कृते धित्वे प्राप्नोति, अन्यस्याकृते । 'शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति'इति । उभयोरनित्ययोः परत्वाद्धित्वम्, धित्वे कृतेऽकज्भविष्यति ॥**

**( प्रदीपः ) यद्येवमिति ।** यदि निर्दिश्यमानस्यादेशस्तदाकचि कृते शब्दान्तरत्वाद्धित्वाप्रसङ्गः ॥

**धित्वे कृतेऽकजिति ।** पुनः प्रसङ्गविज्ञानाश्रयणात् । न ह्यन्यथाऽज्ञाताद्यर्थावगतिर्भवति । अथवाऽज्ञाताद्यर्थापेक्षत्वाद्बहिरङ्गोऽकजिति पूर्वं धित्वं पश्चादकच् ॥

( उद्योतः ) पुनः प्रसङ्गविज्ञानाश्रयणे हेतुमाह—न हीति ॥ अथवेति । इदं चिन्त्यम् । अर्थापेक्षबहिरङ्गत्वस्यात्र शास्त्रेऽनाश्रयणादित्यसकृदावेदितम्[5] ॥

( प्रकारान्तरबोधकभाष्यम् )

**अथवा—हकारस्यैवैतदशक्तिजेनेकारेण ग्रहणमिति ॥**

**(प्रदीपः) अथवेति ।** इकारेणागन्तुना 'हेः'इति निर्देशः । हकारमात्रन्तु स्थानित्वेन निर्दिश्यते । एवं 'धिः'इति धकारमात्रमादेशः । इकारस्तूच्चारणार्थः, व्यञ्जनस्य स्वररहितस्योच्चारयितुमशक्यत्वात् । ततश्च रुदिहीत्यत्र हकारस्येटा व्यवधानाद्धकाराभावः । स हि समुदायभक्तत्वात्तमेव न व्यवदध्यात् । अवयवं तु व्यवदधात्येव । तथा भिन्धकीत्यत्र सत्यपि पूर्वमकचि हकारस्य धकारे कृते रूपं सिध्यति ॥

---

१ 'ह्यानुवर्तिष्यते' इति झ. पाठः ॥
२ 'धेरभावः' इति झ. पाठः ॥
३ 'षष्ठ्या कार्येण च भाव्यम्' छ. ढ. पाठः । अत्र समुच्चयस्याभावात् स चिन्त्यः । अथवा चकारो वार्थ इत्याश्रयणीयम् ॥
४ 'एवं तर्हि' इत्यस्य छ. पुस्तके न पाठः ॥
५ असकृदिति । विस्तरेणैतदन्तरङ्गपरिभाषायामुपपादितम् ॥

( उद्द्योतः ) हकारमात्रस्य स्थाने धीति विशिष्टादेशे रूपं न सिध्येदत आह–एवं धिरितीति॥ अशक्तिजेनेलेतद्व्याचष्टे—व्यञ्जनस्येति। यद्यपि विभक्त्यकारेण स्थानिन उच्चारयितुं शक्यत्वं तथाऽप्यादेशसाधारण्येनेदमेवोक्तम्। यद्वा तत्प्रक्रियावाक्याभिप्रायमिदम्॥

( १३०२ विधिसूत्रम् ॥ ६ । ४ । ३ आ. १५ )

## ३१०२ चिणो लुक् ॥ ६ । ४ । १०४ ॥

( लुकोऽधिकरणम् )

( ६५७८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥*॥ चिणो लुकि तग्रहणम् ॥*॥

( भाष्यम् ) चिणो लुकि तग्रहणं कर्तव्यम्। इह मा भूत्—अकारितराम्, अहारितराम्–इति॥

( प्रदीपः ) तग्रहणमिति। इदमस्मिन्नसिद्धमिति भेदनिबन्धनत्वाद्विषयविषयिभावस्य 'चिणो लुक्'इत्यस्य लक्षणस्य भेदाभावादकारितरामित्यत्र लोपस्यासिद्धत्वाभावात्तरपोऽपि लुक् प्राप्नोति। एवं सति प्रत्ययत्रयात्मकस्य समुदायस्य लुक्प्रसङ्गः॥

( उद्द्योतः ) समुदायस्य लुक्प्रसङ्ग इति। लक्ष्यभेदात् वारं वारं प्रवृत्त्येति भावः॥

( ६५७९ एकदेशिवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ चिणो लुकि तग्रहणानर्थक्यं सङ्घातस्याप्रत्ययत्वात् ॥ * ॥

( भाष्यम् ) चिणो लुकि तग्रहणमनर्थकम्।

सङ्घातस्य लुक् कस्मान्न भवति?

सङ्घातस्याप्रत्ययत्वात्। प्रत्ययस्य लुक्श्लुलुपो भवन्तीत्युच्यते, न च सङ्घातः प्रत्ययः॥

तलोपे तर्हि कृते परस्य प्राप्नोति।

( प्रदीपः ) इतरस्तु युगपत्प्रत्ययत्रयस्य लुक्प्रसङ्गोऽनेनोक्त इति मत्वाऽऽह—चिणो लुकीति॥

इतरः स्वाभिप्रायं प्रकाशयति—तलोप इति॥

( ६५८० सिद्धान्तवार्तिकम् ॥ ३ ॥)

### ॥ * ॥ तलोपस्य चासिद्धत्वात् ॥ * ॥

( भाष्यम् ) असिद्धस्तलोपस्तस्यासिद्धत्वान्न भविष्यति॥

( प्रदीपः ) सिद्धान्त्याह—तलोपस्यासिद्धत्वादिति। प्रतिलक्ष्यं लक्षणभेदादस्ति विषयविषयिभावः॥

( ६५८१ प्रकारान्तरेण तकारानर्थक्ये वार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ कार्यकृतत्वाद्वा ॥ * ॥

( भाष्यम् ) अथवा कृतश्चिणो लुगिति कृत्वा पुनर्न भविष्यति। तद्यथा–वसन्ते ब्राह्मणोऽग्नीनादधीतेति सकृदाधाय कृतः शास्त्रार्थ इति कृत्वा पुनः प्रवृत्तिर्न भवति।

विषम उपन्यासः। युक्तं यत्तस्यैव पुनः प्रवृत्तिर्न स्यात्, यत्तु तदाश्रयं प्राप्नोति न तच्छक्यं बाधितुम्। तद्यथा—वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेत-इति अग्न्याधाननिमित्तं वसन्ते वसन्त इज्यते।

तस्मात्पूर्वोक्तावेव परिहारौ॥

( प्रदीपः ) अभेदपक्षमाश्रित्याह—कार्यकृतत्वाद्वेति। एकस्मिन् विषये सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात् पुनः प्रवृत्त्यभावः॥ तद्यथेति। यथैकस्मिन् वसन्तेऽग्न्याधानं कृत्वा वसन्तान्तरे ब्राह्मणोऽग्न्याधानं न कुरुते, शास्त्रार्थस्यानुष्ठितत्वात्; तथैकस्य प्रत्ययस्य लुकि कृते प्रत्ययान्तरस्य तरबादेर्लुक् न प्रवर्तते॥

युक्तं यत्तस्यैवेति। इहाभिन्नरूपमपि फलभेदाद्भिन्नमुच्यते। अग्न्याधानं तु कर्मान्तरेषु कर्तुर्योग्यतोत्पादनार्थमिति फलभेदाभावात् पुनर्न क्रियते। काम्यानां तु कर्मणां फलभेदात् पुनरनुष्ठानं भवति। तथेहापि तस्य लुकि कृते तरबादेर्लुक्प्रसङ्गः। अग्न्याधानं निमित्तमस्य-इति बहुव्रीहिः। क्रियाविशेषणं चैतत्। अनाहिताग्नेरनधिकारादग्न्याधानं निमित्तं यागस्योच्यते॥

( उद्द्योतः ) अभेदपक्षम्–निमित्तभूतानुपूर्व्यैक्येन लक्षणाभेदपक्षमिति भावः॥ अग्न्याधानाग्निष्टोमयोर्वैधर्म्ये हेतुं न विद्म इति शङ्कां परिहरति—इहाभिन्नरूपमिति। ज्योतिष्टोमादीत्यर्थः॥ कर्मान्तरेषु–अग्निहोत्रादिषु। कर्तुः–इत्युपलक्षणम्। अग्नेश्चेत्यपि बोध्यम्॥ इहापि रूपान्तराद्या फलभेद इत्याह—तथेति। अत्र यद्वक्तव्यं तत् 'संप्रसारणाच्च'इति सूत्र उक्तम्॥ भाष्ये—पूर्वोक्तावेवेति। तग्रहणमसिद्धत्वं वा॥

( प्रकारान्तरबोधकभाष्यम् )

अथवा क्ङितीति वर्तते।

क्व प्रकृतम्?

'गमहनजनखनघसां लोपः क्ङित्यनङि' (६।४।९८) इति।

तद्वै तत्र सप्तमीनिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः।

चिण इत्येषा पञ्चमी क्ङितीति सप्तम्याः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' (१।१।६७) इति॥

१ स्थानिन इति। हल्मात्रस्येति शेषः॥

२ प्रक्रियावाक्येति। हेर्धिरित्यत्र 'ह्–अस्' इति प्रक्रियावाक्यम्। तत्र 'ह्' इति व्यञ्जनमात्रस्योच्चारणमशास्त्रीयमित्यर्थः॥

३ छ. पुस्तके वार्तिकमिदं न दृश्यते॥

( १३०३ विधिसूत्रम् ॥ ६ । ४ । ३ आ. १६ )

## ३१०४ उतश्च प्रत्ययादसंयोगपूर्वात् ॥ ६ । ४ । १०६ ॥

( विशेषणविशेष्यभावे पक्षद्वयप्रदर्शकभाष्यम् )

कथमिदं विज्ञायते–उकारात् प्रत्ययादिति, आहोस्विदुकारान्तात् प्रत्ययादिति ?

किञ्चातः ?

यदि विज्ञायते—उकारात्प्रत्ययादिति सिद्धं तनु-कुरु । चिनु-सुनु-इति न सिध्यति ।

अथ विज्ञायते-उकारान्तात्प्रत्ययादिति सिद्धं चिनु-सुनु । तनु-कुर्विति न सिध्यति ।

तथा—असंयोगपूर्वग्रहणेन इहैव पर्युदासः स्यात्—अक्ष्णुहि, तक्ष्णुहि । आप्नुहि, शक्नुहीत्यत्र न स्यात् ॥

(प्रदीपः) कथमिदमिति । 'उतः' 'प्रत्ययात्'इत्यनयोर्विशेषणविशेष्यभावे कामचारायदोकारः प्रत्ययेन विशेष्यते तदा तदन्तविधेरभावात् 'उकारात् प्रत्ययात्'इति पक्षोऽवतिष्ठते ।

उकारस्य विशेष्यत्वात् तेन नास्ति तदन्तता ।
न सम्भवति चोकारः प्रत्ययान्तो यदा पुनः ॥
विशेष्यत उकारेण प्रत्ययोऽतस्तदन्तता ।
आश्रीयते प्रत्ययस्य तस्मात्पक्षद्वयोद्भवः ॥

पक्षद्वयेऽपि दोषदर्शनात् प्रश्नः ॥

तथेति । तदन्तपक्षेऽयं दोषः । आद्ये तु पक्षे उकारस्याप्रत्ययत्वात् लुक्प्रसङ्ग एवात्र नास्तीति दोषाभावः ॥ ननूकारात् प्रत्ययादिति विज्ञायमान उकारस्य प्रत्ययस्य संयोगपूर्वत्वासंभवादसंयोगपूर्वग्रहणं किमर्थं स्यात् । उच्यते–अङ्गविशेषणं स्यात् । तथा च 'क्ष्णु' इत्यत्र न स्यादित्ययमपि दोषो वक्तव्यः ॥

( उद्द्योतः ) प्रत्ययस्य विशेषणत्वेऽप्यसंभवात्तेन तदन्तविधिर्नेत्याह—न संभवति चेति ॥ द्वितीयं पक्षं दर्शयति—यदा पुनरिति ॥ अङ्गविशेषणं स्यादिति । असंयोगपूर्वादङ्गादुत्तरो य उकाररूपः प्रत्ययस्तस्मादित्यर्थः ॥ [[1]अङ्गविशेषणत्वेऽप्यसंभवात्तेन न तद् ] । क्ष्णिविति । क्षेण्वित्युचितः पाठः, 'संज्ञापूर्वको विधिरनित्यः' इत्यस्य भाष्येऽदर्शनात् ॥ अयमपि दोष इति । आद्ये पक्षे भाष्यानुक्तोऽप्ययं दोषो द्रष्टव्य इत्यर्थः ॥

( पक्षद्वये दोषाभावोपपादकभाष्यम् )

यथेच्छसि तथाऽस्तु ।

अस्तु तावदुकारात्प्रत्ययादिति ।

कथं चिनु-सुन्विति ?

तदन्तविधिना भविष्यति ॥

अथवा-पुनरस्तूकारान्तात्प्रत्ययादिति ।

कथं तनु कुरु ?

व्यपदेशिवद्भावेन भविष्यति ॥

यदप्युच्यते—'तथाऽसंयोगपूर्वग्रहणेनेहैव पर्युदासः स्यात्–अक्ष्णुहि-तक्ष्णुहि । आप्नुहि-शक्नुहीत्यत्र न स्यात्' इति ।

नास्माभिरसंयोगपूर्वग्रहणेनोकारान्तं विशेष्यते।

किं तर्हि ?

उकारो विशेष्यते । उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादिति ॥

( प्रदीपः ) तदन्तविधिनेति । ननूकारस्य विशेष्यत्वात्कथं तदन्तविधिः ? विशेषणत्वात्तु तदन्तविधौ वक्ष्यमाणात्पक्षादस्य भेदो न प्राप्नोति । एवं तर्हि तन्त्रेण सूत्रद्वयमभ्युपगम्यैतदुच्यते । तत्रैकस्मिन् सूत्रे प्रत्ययेनोकारो विशेष्यते, द्वितीये तूकारेण प्रत्यय इति दोषाभावः ॥

व्यपदेशिवद्भावेनेति । 'आद्यन्तवदेकस्मिन्' इत्यनेनेत्यर्थः ॥

किं तर्हि उकारो विशेष्यत इति । ननूकारस्य संज्ञात्वात् संज्ञिपरतन्त्रत्वादप्रधानस्य कथं विशेषणेन सम्बन्धः । नैष दोषः । यावदस्य विशेषणत्वं न विवृतं तावत् संज्ञात्वं नास्तीत्यप्राधान्याभावः । तत्रासंयोगपूर्व उकारः प्रत्ययस्य विशेषणमिति विशेषणेन संबन्धमनुभूय संज्ञात्वमुकारो लभते ॥

( उद्द्योतः ) न प्राप्नोतीति–कर्मकर्तरि प्रयोगः ॥ तत्रैकस्मिन्सूत्र इति । असंयोगपूर्वग्रहणं तु योग्यत्वाद्द्वितीयवाक्य एव संबध्यत इत्यर्थः ॥ आद्यन्तवदेकेति । एवं व्याख्याने बीजं चिन्त्यम् ॥ संज्ञिपरतन्त्रत्वादिति । संज्ञिनि तदन्ते विशेषणत्वादित्यर्थः । तदाह—अप्रधानस्येति ॥ यावदस्येति । अस्यार्थतत्त्वं 'येन विधिः–'इत्यत्र निरूपितम् ॥ असंयोगपूर्व उकार इति । असंयोगपूर्वत्वविशिष्ट इत्यर्थः ॥

( ६५८२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ उतश्च प्रत्ययाच्छन्दोवावचनम् ॥ * ॥

(भाष्यम्) 'उतश्च प्रत्ययात्–'इत्यत्र 'छन्दसि वा' इति वक्तव्यम् । 'अव स्थिरा तनुहि यातुजूनाम् । धिनुहि यज्ञं धिनुहि यज्ञपतिम् । ते न मा भागिनं कृणुहि' ॥

( ६५८३ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ उत्तरार्थं च ॥ * ॥

( भाष्यम् ) केचित्तावदाहुः–छन्दोग्रहणं कर्तव्यमिति ।

---

[1] घ. ङ. पुस्तकयोरयं पाठः ॥

अपर आहुः—चावचनं कर्तव्यमिति । 'लोपश्चास्यान्यतरस्यां म्वोः' (१०७) इत्यत्रान्यतरस्यांग्रहणं न कर्तव्यं भवति ॥

(प्रदीपः) छन्दोग्रहणमिति । 'नित्यं करोतेः' इत्यत्र वाक्यभेदेन 'छन्दसि वा' इति सम्बध्यते ॥

(उद्द्योतः) 'उत्तरार्थं छन्दोग्रहणम्' इत्यत्र यदुक्तं तद्व्याचष्टे—नित्यं करोतेरिति । तत्र च्छन्दोग्रहणमेवं कार्यम् । तच्च वाक्यभेदेन छन्दसि विकल्पविधानार्थम्, नित्यस्य पूर्वेणैव सिद्धत्वादिति भावः ॥

(१३०४ विधिसूत्रम् ॥ ६ । ४ । ३ आ. १७)

## ३१०८ अत उत् सार्वधातुके ॥ ६ । ४ । ११० ॥

(उदादेशाधिकरणम्)

(पदकृत्यभाष्यम्)

सार्वधातुक इति किमर्थम् ?

इह मा भूत्—सञ्चस्करतुः, सञ्चस्करुरिति ॥

(प्रदीपः) सार्वधातुक इति किमर्थमिति । सत्यपि सार्वधातुकग्रहणे स्यान्तनिवृत्त्यर्थोऽवश्यं कर्तव्यो यत्न इति तेनैव यत्नेनार्धधातुके न भविष्यतीति भावः ॥

(उद्द्योतः) कर्तव्यो यत्न इति । 'उतः' इत्यनुवृत्तिरूपः ॥[1] विकरणे कृत इति । अन्तरङ्गत्वादिति भावः ॥

(प्रतिषेधोपसंख्यानभाष्यम्)

स्यान्तस्य प्रतिषेधो वक्तव्यः । करिष्यति । करिष्यते ॥

(प्रदीपः) स्यान्तस्येति । इह सार्वधातुके विकरणे कृते तेन व्यवधानात्सार्वधातुकपरतः करोतेरित्यस्यार्थस्यासम्भवात्सार्वधातुके परतो यदङ्गं तदवयवस्य करोतेरित्याश्रयणीयम् । एवं च स्यान्तस्यापि प्राप्नोति । स्यग्रहणमुपलक्षणम्, तास्यन्तस्यापि प्रसङ्गात् ॥

(उद्द्योतः) असंभवादिति । 'करोतेः' इति धातुनिर्देश इत्यर्थः ॥

(६५८४ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ १ ॥)

### ॥ * ॥ कृञ उत्व उकारान्तनिर्देशात्स्यान्तस्याप्रतिषेधः ॥ * ॥

(भाष्यम्) कृञ उत्वे उकारान्तनिर्देशात्स्यान्तस्याप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः ।

उत्वं कस्मान्न भवति ?

उकारान्तनिर्देशात् ॥

(प्रदीपः) कृञ उत्व इति । 'उतः' इत्यनुवर्तनादिति भावः ॥

(आक्षेपभाष्यम्)

अशक्यः करोतावुकारान्तनिर्देशस्तत्राश्रयितुम् । इह सम्परिभ्यां भूषणसमवाययोः करोतावितीहैव स्यात्—संस्करोति,

संस्कर्ता—संस्कर्तुमित्यत्र न स्यात् ॥

(प्रदीपः) इतरस्तु करोतेरित्युकारनिर्देशाश्रयेणानेनोक्तमिति मत्वाऽऽह—अशक्य इति ॥

(उद्द्योतः) भाष्ये—तत्राश्रयितुमिति । करोतिनिर्देशे इत्यर्थः ॥

(आक्षेपसमर्थकभाष्यम्)

न ब्रूमोऽस्मादुकारान्तनिर्देशाद्योऽयं करोतेरिति ।

किं तर्हि ?

उकारान्तप्रकरणादुकारान्तमङ्गमभिसंबध्यते । उत इति वर्तते ।

यद्येवम्, नार्थः सार्वधातुकग्रहणेन ।

कस्मान्न भवति—संचस्करतुः, संचस्करुरिति ?

उत इति वर्तते ॥

(प्रदीपः) उत इति वर्तत इति । तेनोकारान्तस्याङ्गस्यावयवस्य करोतेरत उत् सार्वधातुके क्ङिति भवतीति सूत्रार्थः संपद्यते ॥

(सार्वधातुकपदप्रयोजनभाष्यम्)

उत्तरार्थं तर्हि सार्वधातुकग्रहणं कर्तव्यम्—'श्नसोरल्लोपः' (१११) इति ।

श्नः सार्वधातुक एव, अस्तेरप्यार्धधातुके भूभावेन भवितव्यम् ।

उत्तरार्थमेव तर्हि—'श्नाऽभ्यस्तयोरातः' (११२) इति ।

श्ना सार्वधातुक एव । अभ्यस्तमप्याकारान्तमार्धधातुके नास्ति ।

ननु चेदमस्ति—अप्सु यायावरः प्रवपेत पिण्डानिति ।

नैतदाकारान्तम् ।

किं तर्हि ?

यकारान्तमेतत् ॥

उत्तरार्थमेव तर्हि—'ई हल्यघोः' (११३) इति ।

तत्रापि श्नाऽभ्यस्तयोरित्येव ॥

अतोऽप्युत्तरार्थमेव तर्हि—'इद्दरिद्रस्य' (११४) इति ।

वक्ष्यत्येतत् 'दरिद्रातेरार्धधातुके लोपः सिद्धश्च प्रत्ययविधौ' इति ॥

अतोऽप्युत्तरार्थं—'भियोऽन्यतरस्याम्' (११५) । अभ्यस्तस्येत्येव ॥

---

[1] 'देशलक्षणभा—' इति क. छ. पाठः ॥

[1] 'श्नम् सार्वधा—' इति ग. छ. झ. पाठः ॥

अतोऽप्युत्तरार्थमेव तर्हि-'जहातेश्च' (११६)। अभ्यस्तस्येत्येव ॥

अतोऽप्युत्तरार्थम्-'आ च हौ' (११७)। द्वावित्युच्यते, अभ्यस्तस्येत्येव ॥

अतोऽप्युत्तरार्थमेव-'लोपो यि' (११८)। अभ्यस्तस्येत्येव ॥

अतोऽप्युत्तरार्थमेव तर्हि-'घ्वसोरेद्धावभ्यासलोपश्च' (११९)। द्वावित्युच्यते ॥

(प्रदीपः) अभ्यस्तमपीति । यत्र नेष्यते लोप इति भावः । यत्र त्विष्टि तत्र भवत्येव लोपः—ययतुः, ययुरिति ॥

यायावर इति । ननु चातो लोपस्य स्थानिवद्भावात् प्राप्त आकारलोपे वरेऽजादेशस्य स्थानिवत्त्वं निषिध्यते । यदि चात्र 'श्नाऽभ्यस्तयोरातः' इत्यालोपः स्यात् स्थानिवत्त्वनिषेधोऽनर्थकः स्यात् । 'ईहल्यघोः' इतीत्वमत्र प्राप्नोतीति चेत् वक्ष्यत्येव तत्प्राप्तिमिति वक्ष्यमाणाद्भेदाभावः ॥

एवं तर्हि एवं भाष्यकार आल्लोपप्राप्तिमभ्युपेत्य परिहारान्तरमाह—नैतदाकारान्तमिति । या य इति स्थिते सन्यङन्तस्य प्रथमस्यैकाचो द्विर्वचनमिति यायू इत्यस्य द्विर्वचनं ततो यायाय् इत्यभ्यस्तमाकारान्तं न भवति ॥

ननु यायायूशब्दस्याभ्यस्तसंज्ञायां यलोपे कृते भवत्येवावशिष्टस्याभ्यस्तसंज्ञा । एवं तर्हि उपदेशग्रहणानुवृत्त्या उपदेशे यदाकारान्तमभ्यस्तं तस्याल्लोपो न तु कृते यलोप इति मत्वा परिहार चक्रः—अभ्यस्तस्येत्येवेति ॥ ननु च बिभीवानित्यत्रापि प्राप्नोति । एवं तर्हि छान्दसः क्वसुरिति भाष्यकारस्य दर्शनम्, छन्दसि च दृष्टमनुविधीयते ॥

(उद्द्योतः) नन्वभ्यस्तमाकारान्तं विधत एव ययतुरित्यादावत आह—यत्र नेष्यत इति । यत्र दोषः स्यादित्यर्थः ॥ तत्र भवत्येवेति । 'आतो लोप इटि च' इत्यनेनेति भावः ॥

ननु चातो लोपस्येति । यातेर्यङन्तात् 'यश्च यङः' इति वरच्परनिमित्ताल्लोपस्य स्थानिवत्त्वात् 'आतो लोप–' इत्यालोपे प्राप्ते वरेऽजादेशस्य स्थानिवत्त्वं निषिध्यत इत्यर्थः ॥

एवं तर्हि एवमिति । 'सत्यामप्याल्लोपाप्राप्तौ' इति शेषः ॥ अभ्युपेत्येति । यद्यपि स्थानिवत्त्वनिषेधसामर्थ्यादाल्लोपाप्राप्तिरेव तथापि तत्प्राप्तिमभ्युपगम्य न्यायव्युत्पादनाय परिहारान्तरमुच्यत इत्यर्थः । वस्तुतस्तु 'ई हल्यघोः' इत्येतत्प्राप्तिसाधारणं समाधानं वक्तुं तत्त्यागः । अत एव सांप्रतपुस्तकेषु 'ई हल्यघोः' इत्युत्तरं 'तत्रापि श्नाभ्यस्तयोः–'इत्येवोपलभ्यते न तु 'ननु चेदमस्ति–अप्सु यायावरः' इत्यादिग्रन्थ इत्याहुः ॥

यलोप इति । 'लोपो व्योः–' इत्यनेन ॥ उपदेशग्रहणानुवृत्त्येति । 'स्यसिच्सीयुट्तासि–' इत्यतः । वस्तुतोऽल्लोपस्यासिद्धत्वेनापि यायावरः परिहर्तुं शक्यः । अत्रेदं चिन्त्यम्—जहाति ददातीत्यादावीत्वाल्लोपयोर्वारणाय क्ङितीत्येतत्संबन्धावश्यकत्वेनैकदेश्युक्तिरियं 'ननु चेदमस्ति' इत्यादिः ॥ ननु च बिभीवानिति । 'भियोऽन्यतरस्याम्' इत्यत्रासति सार्वधातुकग्रहणे क्वसावप्यस्येत्त्वविकल्पः स्यादित्यर्थः ॥ छान्दस इति । बिभीवानित्यत्रेत्यर्थः ॥ इष्टमिति । ततश्चात्रायं विधिर्न भवतीत्यर्थः ॥ भाष्ये—अतोऽप्युत्तरार्थम्-आ च हौ । द्वावित्युच्यते, अभ्यस्तस्येत्येवेति । चं विनापि समुच्चयदर्शनादित्येव चोच्यत इत्यर्थः ॥

(प्रथमप्रयोजनस्थापकभाष्यम्)

तदेव तर्हि प्रयोजनम्-'श्नसोरल्लोपः' इति । ननु चोक्तं 'श्नः सार्वधातुक एव, अस्तेरप्यार्धधातुके भूभावेन भवितव्यम्' इति ॥

(प्रयोजनसमर्थकं श्लोकवार्तिकम्)

**अनुप्रयोगे तु भुवाऽस्त्यबाधनं**
**स्मरन्ति कर्तुर्वचनान्मनीषिणः ॥**

(भाष्यम्) अनुप्रयोगे तु भूभावेनास्तेरबाधनमिष्यते-ईहामासतुः, ईहामासुः ॥

किं च स्याद्यद्यत्र लोपः स्यात् ॥

(सार्वधातुकपराभावे दोषप्रतिपादकं श्लोकवार्तिकम्)

**लोपे द्विर्वचनासिद्धिः**

(भाष्यम्) लोपे कृतेऽनच्कत्वाद्द्विर्वचनं न स्यात् ॥

स्थानिवद्भावाद्भविष्यति ।

(दोषप्रापकं श्लोकवार्तिकम्)

**स्थानिवदिति चेत्कृते भवेत् द्वित्वे ॥**

(भाष्यम्) स्थानिवदिति चेत् कृते द्वित्वे लोपः प्राप्नोति ॥

अस्तु तर्हि परस्य लोपः । अभ्यासस्य योऽकारस्तस्य दीर्घत्वं भविष्यति ॥

(प्रदीपः) कृते द्वित्वे लोपः प्राप्नोतीति । ननु च नियतकालत्वात् स्थानिवद्भावस्य कृते द्विर्वचने लक्षणप्रवृत्तिमन्तरेण स्वत एवादेशरूपमवतिष्ठत इति लोपस्य कथं प्राप्तिः ? उच्यते-पुनः प्रवृत्तिर्लक्षणस्येति स्थानिवद्भावप्रकरणे प्रतिपादितम् ॥

अस्तु तर्हीति । अनन्त्यविकारेऽन्त्यसदेशस्येति वचनात् । अथवा-ङ्क्लिसनन्तरस्याकारस्य लोपः । तत्र येन नाव्यवधानमित्येकवर्णव्यवहितस्य लोपः ॥ दीर्घत्वमिति । 'अत आदेः' इत्यनेन ॥

(उद्द्योतः) नियतकालत्वादिति । 'द्विर्वचन एव कर्तव्ये' इत्यवधारणान्नियतकालत्वं स्थानिवत्त्वस्योक्तम् । तत्र कृते द्वित्व आदेशरूपमेव चक्रतुरित्यादौ भवतीति पुनर्लोपाऽप्राप्तिरित्यर्थः ॥ रूपातिदेश आह—पुनः प्रवृत्तिरिति । अत एव निन्युतुरित्यादौ पूर्वं

१ 'अतोऽप्युत्तरार्थः-घ्वसो' इति च. छ. झ. पाठः ॥

प्रवृत्तोऽपीयङ् द्विर्वचनकालेऽपहृत इति पुनः प्रवृत्तौ प्राप्तायामनेकाच्त्वाद्यणा बाध्यत इत्यर्थः ॥ 'परस्यैव लोपः' इति नियमः कथमत आह—अनन्त्येति ॥ अंथवेति । आद्यस्योत्तरेणाव्यवधानादिति भावः । अनर्थकत्वाच्चेत्यपि बोध्यम् ॥

( दोषप्रतिपादकं श्लोकवार्तिकम् )

**नैवं सिध्यति कस्मात्**
**प्रत्यङ्गत्वाद्भवेद्धि पररूपम् ॥**

( भाष्यम् ) नैवं सिध्यति ।

कस्मात् ?

प्रत्यङ्गत्वात्पररूपं प्राप्नोति ॥

( प्रदीपः ) प्रत्यङ्गत्वादिति । वर्णाश्रयत्वात्पररूपमन्तरङ्गम्, तत्र कृते अल्लोपे च 'सतुः' 'सुः' इति प्राप्नोति ॥

( उद्द्योतः ) प्रत्यङ्गत्वादित्यस्यान्तरङ्गत्वादित्यर्थं इत्याह—वर्णाश्रयत्वादिति । 'वार्णादाङ्गं' इत्यनाश्रित्येदम् ॥

( दोषे श्लोकवार्तिकम् )

**तस्मिंश्च कृते लोपः**

( भाष्यम् ) पररूपे च कृते लोपः प्राप्नोति ॥

( दोषसमर्थकं श्लोकवार्तिकम् )

**दीर्घत्वं बाधकं भवेत्तत्र ॥**

( भाष्यम् ) 'अत आदेः' (७।४।७०) इति दीर्घत्वं बाधकं भविष्यति ॥

( प्रदीपः ) दीर्घत्वमिति । येन नाप्राप्तिन्यायेन पररूपं बाधित्वा दीर्घत्वं भविष्यतीत्यर्थः ॥

( उद्द्योतः ) अन्तरङ्गस्य कथं बहिरङ्गं बाधकमत आह—येन नेति ॥

( दोषप्रतिपादकं भाष्यम् )

इदं तर्हि प्रयोजनं-सार्वधातुके भूतपूर्वमात्रेऽपि यथा स्यात् । कुरु-इति ॥

( प्रदीपः ) कुर्विति । अत्र 'न लुमताऽङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधादुत्वं न स्यादिति भूतपूर्वगत्यर्थात्सार्वधातुकग्रहणाद्भवति ॥

( उद्द्योतः ) ननु प्रत्ययलक्षणेन हेः परत्वसंभवे भूतपूर्वगत्याश्रयणमयुक्तमित्यत आह—अत्र नेति । न च 'सार्वधातुके' इत्यस्याभाव उकारान्ताङ्गावयवकरोतेरत उदित्यर्थेन तृज्वत्सूत्रे 'श्नुवोरनाकौ' इत्यादौ च वक्ष्यमाणभाष्यरीत्याऽङ्गसंज्ञायाः प्रत्ययलक्षणेनाङ्गीकारेण कुर्वित्यत्र सिद्धो लोपः, हिलुक आभीयासिद्धत्वाच्चेति वाच्यम् । इदं तर्हीत्यादि कुर्वित्यन्तभाष्यस्यैकदेश्युक्तित्वात् । सार्वधातुकग्रहणं तु स्पष्टार्थमेवेति दिक् ॥

---

( १३०५ विधिसूत्रम् ॥ ६ । ४ । ३ आ. १८ )

## ३१०९ श्नसोरल्लोपः ॥ ६ । ४ । १११ ॥

( तपरत्वस्य निष्प्रयोजनत्वप्रतिपादकभाष्यम् )

अथात्र तपरकरणं किमर्थम् ?

इह मा भूत्—आस्ताम्, आसन् ।

नैतदस्ति प्रयोजनम् । आटोऽसिद्धत्वान्न भविष्यति ॥

( प्रदीपः ) आस्तामिति । लङ्, ताम् । अल्लोपे च कृते तस्यासिद्धत्वादाट् ॥

नैतदस्तीति । अत्र प्रत्याख्यातं तपरकरणं परस्तात्तु ज्ञापकत्वमस्य वक्ष्यते—

'श्नसोरत्वे तकारेण ज्ञाप्यते त्वेत्वशासनम्' ॥ इति ।

( उद्द्योतः ) तस्यासिद्धत्वादिति । न चैवं लक्ष्ये लक्षणस्येति न्यायेन पुनर्लोपाप्रवृत्त्या तपरत्वाभावेऽपि न दोषः । लक्ष्यभेदात् ॥

---

( १३०६ विधिसूत्रम् ॥ ६ । ४ । ३ आ. १९ )

## ३१११ इद्दरिद्रस्य ॥ ६ । ४ । ११४ ॥

( उद्द्योतः ) सौत्रो निर्देशः ॥

( ६५८५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ दरिद्रातेरार्धधातुके लोपः ॥ * ॥**

( भाष्यम् ) दरिद्रातेरार्धधातुके लोपो वक्तव्यः ॥

( ६५८६ सिद्धत्वोपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सिद्धश्च प्रत्ययविधौ ॥ * ॥**

( भाष्यम् ) स च सिद्धः प्रत्ययविधौ ।

किं प्रयोजनम् ?

दरिद्राति-इति दरिद्रः, आकारान्तलक्षणः प्रत्ययविधिर्मा भूदिति ॥

**न दरिद्रायके लोपो**
**दरिद्राणे च नेष्यते ।**
**दिदरिद्रासतीत्येके**
**दिदरिद्रिषतीति वा ॥**

( प्रदीपः ) सिद्धश्चेति । 'आर्धधातुके' इति विषयसप्तमीत्यर्थः ॥

आकारान्तलक्षण इति । यद्यार्धधातुक इति परसप्तमी स्यात्तदा दरिद्रातीति दरिद्र इति 'श्याद्व्यधा-' इति णे कृते द्वयोरनित्ययोः परत्वाद्युक् स्यात् । लोपस्य शब्दान्तरप्राप्त्याऽनित्यत्वम् । युकस्तु लोपे कृतेऽप्राप्त्याऽनित्यत्वम् । अथाकृतिपक्षे नित्यत्वादाल्लोपस्तथाप्यदरिद्र इत्यत्र च 'अच्कावशक्तौ'

इत्यन्तोदात्तत्वं न स्यात् । ईषद्दरिद्रमिति 'आतो युच्' इति युच् प्रसज्येत ॥

**दिदरिद्रासतीति** । तनिपतिदरिद्राणामुपसंख्यानमिति व्यवस्थितविभाषाविज्ञानाल्लोपपक्षे इडागमः । लोपाभावपक्षे त्विडभावः ॥

(उद्द्योतः) द्वयोः–लोपयुकोः ॥ शब्दान्तरेति । अकृते युक्याकारस्य, कृते यकारस्येत्यर्थः ॥ अथाकृतीति । अत्र पक्षे व्यक्तिभेदाविवक्षणाच्छब्दान्तरप्राप्त्या नानित्यत्वम् ॥ अच्कावशक्ताविति । नञ उत्तरस्याजन्तस्य कान्तस्य चोत्तरपदस्याशक्तौ गम्यमानायामन्त उदात्त इति तदर्थः ॥ युच् प्रसज्येतेति । खलिष्यत इति भावः ॥ ननु लोपपक्ष इट्, तदभावे नेति कुतोऽत आह—तनिपतीति । वस्तुतस्त्विट्पक्षे 'आतो लोप इटि च' इत्यालोपः । इडभावेऽनेन प्राप्तलोपस्य तु स निषेध इति व्यवस्थितविभाषात्वाङ्गीकारो वृथैवेति बोध्यम् ॥

(६५८७ उपसंख्यानवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ अद्यतन्यां वा ॥ * ॥

**(भाष्यम्) अद्यतन्यां वेति वक्तव्यम् । अदरिद्रीत्, अदरिद्रासीत् ॥**

(प्रदीपः) **अदरिद्रासीदिति** । 'यमरम-'इत्यत्रैकाच इत्यधिकारादेकाचः सगिटाविति केचित्—इत्यनेकाचोऽपि भवतः । चिणि 'अदरिद्रि' 'अदरिद्रायि'इति भवति ॥

(उद्द्योतः) 'अद्यतनी'शब्देन पूर्वाचार्यप्रसिध्या लुङुच्यते ॥



(१३०७ विधिसूत्रम् ॥ ६ । ४ । ३ आ. २०)

# ३११८ अत एकहल्मध्येऽनादेशादेर्लिटि ॥ ६ । ४ । १२० ॥

(एत्वाधिकरणम्)

(६५८८ उपसंख्यानवार्तिकम् ॥ १ ॥)

## ॥*॥ णकारषकारादेरेत्ववचनं लिटि ॥*॥

**(भाष्यम्) णकारषकारादेरेत्वं लिटि वक्तव्यम् । नेमतुः । नेमुः । सेहे । सेहाते । सेहिरे ।**

**किं पुनः कारणं न सिध्यति ?**

**अनादेशादेरिति प्रतिषेधः प्राप्नोति ॥**

(विशेष्यविशेषणभावेनेष्टसाधकं भाष्यम्)

**तर्त्तर्हि वक्तव्यम् ?**

**न वक्तव्यम् । लिटाऽत्रादेशादिं विशेषयिष्यामः, लिटि य आदेशस्तदादेर्नेति ॥**

(प्रदीपः) **लिटि य आदेशादिरिति** । नत्वसत्वयोरनैमित्तिकत्वाल्लिनिमित्तकत्वाभावः ॥

(उद्द्योतः) भाष्ये—लिटि य इति । सौत्रत्वाच्च वृत्तिरिति भावः ॥

(विशेषणविशेष्यभावाक्षेपसमाधानभाष्यम्)

**अस्त्यन्यल्लिङ्ग्रहणस्य प्रयोजनम् । किम् ?**

**इह मा भूत्—पक्वा, पक्वम् ।**

**नैतदस्ति प्रयोजनम् । क्ङितीति वर्तते ।**

**एवमपि पक्वः पक्ववानित्यत्र प्राप्नोति । अभ्यासलोपसन्नियोगेनैत्वमुच्यते । न चात्राभ्यासलोपं पश्यामः ।**

**एवमपि पापच्यते–अत्र प्राप्नोति । दीर्घत्वमत्र बाधकं भविष्यति । नाप्राप्तेऽभ्यासविकार एत्वमारभ्यते, तद्यथाऽसावन्यानभ्यासविकारान् बाधत एवं दीर्घत्वमपि बाधेत ।**

**सत्यमेवमेतत् ।**

**अभ्यासविकारेष्वपि तु ज्येष्ठमध्यमकनीयांसः प्रकारा भवन्ति । तत्र ह्रस्वहलादिशेषावुत्सर्गौ तयोर्दीर्घत्वमपवाद एत्वं च । अपवादविप्रतिषेधाद्दीर्घत्वं भविष्यति ॥**

(प्रदीपः) **अभ्यासलोपसंनियोगेनेति** । अभ्यासलोपश्चेति चशब्दः समुच्चये, न त्वन्वाचये ॥

**दीर्घत्वमत्रेति** । अभ्यासविकारेषु बाधका न बाधन्त इत्येतत्तु यत्र सर्वेषां प्रवृत्तिस्तत्राश्रीयते । यद्यपि कृते दीर्घत्वे एत्वाभ्यासलोपप्रसङ्गस्तथाप्येत्वाभ्यासलोपयोः कृतयोर्दीर्घत्वाप्रसङ्ग इति विरुद्धत्वादबाधकत्वाभावः ॥

**नाप्राप्त इति** । क्वचित् ह्रस्वः क्वचिद्धलादिशेषश्च प्राप्नोति ॥

**ज्येष्ठमध्यमकनीयांस इति** । मध्यमापेक्षयोत्सर्गस्य प्रकर्षसद्भावात् कनीयानुत्सर्गोऽल्पतर इत्यर्थः । मध्यमो यः कस्यचिद्बाधकः कस्यचिद्बाध्यः । ज्येष्ठो यो बाधकस्यापि बाधकः ॥

(उद्द्योतः) समुच्चय इति । तस्य प्रसिद्धतरत्वादिति भावः । अन्वाचयस्तु गमके सत्येवेति तात्पर्यम् ॥ भाष्ये—दीर्घत्वमत्र बाधकमिति । परत्वादिति भावः ॥ इत्येतत्त्विति । सर्वेषां प्रवृत्त्या यत्रोत्सर्गापवादयोरविरोधस्तत्रायं न्यायः, यथा नर्नर्तीत्यादावुरदत्वे रुगादयः क्रियन्ते । इह तु विरोधादयं न्यायो नेति भावः ॥ तमेव विरोधं दर्शयति—यद्यपीति । इदं चिन्त्यम् । नुकि कृतेऽजन्ताभ्यासाभावेन दीर्घाऽप्राप्त्या 'दीर्घोऽकितः' इति धर्मिग्राहकमानविरोधात् मानादीनां दीर्घे कृत ह्रस्वाऽप्राप्त्या 'मीमांसते' इति तदुदाहरणपर'गुणो यङ्लुकोः' 'मान्बध-'इत्यादिसूत्रस्थभाष्यविरोधाच्च । तस्माज्ज्ञापकसिद्धस्यासार्वत्रिकत्वेनानित्यत्वात्तस्यात्रानाश्रयणमिति भगवतो भाष्यकारस्याभिप्रायः ॥

**क्वचिद्ध्रस्व इति** । अभ्यासविकारेष्वेतौ द्वावुत्सर्गौ, तयोरन्येऽपवादा इति भावः ॥

ननु विनाऽवधिं ज्येष्ठत्वादिकं न संभवतीत्यत आह—मध्यमापेक्षयेति । प्रकर्षो दुर्बलत्वरूपबाध्यत्वमात्रकृतः ॥ ज्येष्ठत्वमपि तत एवेत्याह—ज्येष्ठो य इति । तत्र दीर्घावकाशो—बाभाम्यते ।

एत्वस्य—पेचतुः । पापच्यत इत्यत्रोभयप्राप्तौ दीर्घत्वेनायं विधिर्बाध्यते ॥

( वार्तिकावतरणभाष्यम् )

इह तर्हि—बभणतुः—बभणुरित्यभ्यासादेशस्यासिद्धत्वादेत्वं प्राप्नोति ॥

( प्रदीपः ) असिद्धत्वादिति । 'पूर्वत्रासिद्धम्' इति लक्षणेन । चकणतुरित्यादावेव तु प्रतिषेधः स्यात् ॥

( उद्द्योतः ) नन्वनादेशादेरिति व्यर्थं स्यादत आह—चकणतुरिति । अत्र 'कुहोश्चुः' इति चुत्वम्, तच्च नासिद्धम् ॥

( ६५८९ सिद्धत्वज्ञापकवार्तिकम् ॥ २ ॥ )

॥ * ॥ फलिभजिग्रहणं तु ज्ञापकमभ्यासादेशासिद्धत्वस्य ॥ * ॥

( भाष्यम् ) यदयं फलिभज्योर्ग्रहणं करोति तज्ज्ञापयत्याचार्यः—अभ्यासादेशः सिद्ध एत्त्व इति ।

यद्येवं—

( ६५९० आक्षेपवार्तिकम् ॥ ३ ॥ )

॥ * ॥ प्रथमतृतीयादीनामादेशादित्वादेत्त्वाभावः ॥ * ॥

( भाष्यम् ) प्रथमतृतीयादीनामपि तर्ह्यादेशादित्वादेत्वं न प्राप्नोति । पेचतुः । पेचुः । देभतुः । देभुः ॥

( प्रदीपः ) पेचतुरिति । प्रकृतिचरां प्रकृतिचराः प्रकृतिजशां प्रकृतिजश इत्यादेशादित्वम् । वचनं तु 'रेणतुर्येमतुः' इत्यादौ सावकाशम् । 'अभ्यासे चर्च' इति जश्चरोः प्राप्तयोः 'स्थानेऽन्तरतमः' इति परिभाषाया व्यापारप्रदर्शनमिदं—प्रकृतिचरां प्रकृतिचरः प्रकृतिजशां प्रकृतिजश इति ॥

( उद्द्योतः ) रेणतुरिति । अत्र जश्त्वचर्त्वे न, झलोऽभावात् ॥ ननु प्रकृतिचरामित्यादि न सूत्रवार्तिकयोः पठ्यते तत्किमिदमत आह—अभ्यास इति ॥

( ६५९१ समाधानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ न वा शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेदे एत्वविज्ञानस्य ॥ * ॥

( भाष्यम् ) न वा एष दोषः ।

किं कारणम् ?

शसिदद्योः प्रतिषेधो ज्ञापको रूपाभेदे एत्वविज्ञानस्य । यदयं शसिदद्योः प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः—रूपाभेदेन ये आदेशादयो न तेभ्यः प्रतिषेधो भवतीति ॥

( ६५९२ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ दम्भ एत्वम् ॥ * ॥

( भाष्यम् ) दम्भ एत्वं वक्तव्यम् । देभतुः । देभुः ।

किं पुनः कारणं न सिध्यति ?

( ६५९३ उपसंख्यानसमर्थकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ नलोपस्यासिद्धत्वात् ॥ * ॥

( भाष्यम् ) असिद्धो नलोपस्तस्यासिद्धत्वादेत्वं न प्राप्नोति ॥

( उपसंख्याने श्लोकवार्तिकम् )

नशिमन्योरलिट्येत्वम् ।

( भाष्यम् ) नशिमन्योरलिटि एत्वं वक्तव्यम् ॥

( उपसंख्याने श्लोकवार्तिकम् )

छन्दस्यमिपचोरपि ॥

( भाष्यम् ) छन्दसि अमिपचोरपीति वक्तव्यम् ।

किं प्रयोजनम् ?

( प्रयोजने श्लोकवार्तिकम् )

अनेशं मेनकेत्येतद्

व्येमानं लिङि पेचिरन् ॥

यजायेजे वपावेपे

( भाष्यम् ) यजः—आयेजे, वपः—आवेपे ॥

( श्लोकवार्तिकम् )

दम्भ एत्वमलक्षणम् ॥

( भाष्यम् ) असिद्धत्वान्नलोपस्य दम्भ एत्वं न सिध्यति ॥

(प्रदीपः) अनेशमिति । लुङ्, मिपोऽम्भावः । पुषादित्वादङादेशः, छन्दसीति पूर्वेणापि सम्बन्धाद्भाषायामेत्त्वाभावः । एवं तु मेनकेत्यपि भाषायां न प्राप्नोति । यदि त्विष्यते पृषोदरादित्वाद्भविष्यति । 'मनेराशिषि च' इति वुन्प्रत्ययः । 'न यासयोः' इत्यत्राशिषि चोपसंख्यानमितीत्वाभावः ॥ व्येमानमिति । विपूर्वादमतेस्ताच्छील्यादिषु चानश्, छान्दसः शपो लुक् ॥ पेचिरन्निति । पचेरन्निति प्राप्ते छान्दसे एत्वहखत्वे क्रियेते ॥ आयेज इति । लङ्, इट् । 'छन्दस्यपि दृश्यते' इति आट् ॥ दम्भ एत्वमलक्षणमिति । लक्षणेन न प्राप्नोति, नलोपस्यासिद्धत्वादित्यर्थः ॥

( उद्द्योतः ) एवं त्विति । छन्दसीत्यस्य संबन्ध इत्यर्थः । 'चेष्टा व्यनेशन्निखिलास्तदाऽस्याः' इति श्रीहर्षस्य तु प्रमादः ॥ चानशिति । न तु शानच्, धातोः परस्मैपदित्वात् । लुक्—'बहुलं छन्दसि' इत्यनेन । अत एव मुगभावः ॥ लङिति । केचित्तु

१ प्रमाद इति । 'नशिमन्योरलिट्येत्वं' इत्यत्रापि छन्दसीत्यस्य संबन्धात् भाषायां नशेरेत्वाभावात् 'व्यनेशन्' इति प्रामादिकमिति भावः ॥

यजेराद्यपूर्वस्येदम् । अत एव 'मनुरायेजे' इत्यत्राऽवग्रहं कुर्वन्तीत्याहुः ॥

( ज्ञापकेनोपसंख्यानसाधकं श्लोकवार्तिकम् )

**श्नसोरत्त्वे तकारेण**
**ज्ञायते त्वेत्त्वशासनम् ॥**

( भाष्यम् ) अनित्योऽयं विधिरिति ॥

( प्रदीपः ) श्नसोरत्त्व इति । असिद्धत्वस्यानित्यत्वज्ञापनाय तकारः कृतः । नित्ये ह्यसिद्धत्वे 'आसन्'इत्यादावाटोऽसिद्धत्वाल्लोपो न भविष्यतीति किं तन्निवृत्त्यर्थेन तकारेण । तेनासिद्धत्वाभावाद्दम्भ एत्त्वं सिध्यतीत्यर्थः ॥

( १३०८ विधिसूत्रम् ॥ ६ । ४ । ३ आ. २१ )

## ३११९ थलि च सेटि ॥ ६।४।१२१ ॥

( वार्तिकावतरणभाष्यम् )

**थल्ग्रहणं किमर्थम् ?**

( प्रदीपः ) थल्ग्रहणमिति । क्ङिति सेटि एत्वस्य सिद्धत्वात्सेड्ग्रहणमेवाक्ङिदर्थं भविष्यति थलेत्र च सेडक्ङित्-इति प्रश्नः ॥

( ६५९४ थल्ग्रहणप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ थल्ग्रहणमक्ङिदर्थम् ॥ * ॥**

( भाष्यम् ) थल्ग्रहणं क्रियतेऽक्ङिदर्थम् । अक्ङिति एत्वं यथा स्यात् । पेचिथ । शेकिथ ॥

( प्रयोजनाक्षेपभाष्यम् )

नैतदस्ति प्रयोजनम् । सेड्ग्रहणमेवात्राक्ङिदर्थं भविष्यति ॥

( प्रयोजनान्तरदर्शकभाष्यम् )

इदं तर्हि प्रयोजनम्-समुच्चयो यथा स्यात् थलि च सेटि क्ङिति च सेटि-इति ।

किं प्रयोजनम् ?

पेचिव । पेचिम । तत्र 'पचादिभ्य इड्वचनम्' इति वक्ष्यति तन्न वक्तव्यं भवति ॥

( प्रदीपः ) क्ङिति च सेटीति । इदं च न नियमार्थम् । सेट्येव क्ङितीति नियमे हि पेचतुरित्यादौ न स्यात् । किं तर्हि ? एत्वस्य कालावधारणं क्रियते, यथा 'निष्ठायां सेटि' इत्यत्र । तेन पेचिवेत्यादाविटि कृते एत्वाभ्यासलोपौ भवतः । अन्यथा 'एकाचः' इतीट्प्रतिषेधः प्रसज्येत । यदोपदेशग्रहणमनुदात्तविशेषणं नैकाज्विशेषणं तदा श्रूयमाणादेकाच इट्प्रतिषेधेन भाव्यमिति 'क्रसृ-' इति सूत्रं विध्यर्थं भवति, न तु नियमार्थम् । तत्र पचेरेत्वाभ्यासलोपयोः कृतयोरेकाच्त्वादिट्प्रतिषेधप्रसङ्गे पचादिभ्य इड्वचनमिति वक्ष्यते । क्ङिति च सेटीति तु कालावधारणार्थे सति पूर्वमिट्, तत एत्वाभ्यासलोपावित्यानुपूर्व्या सिद्धं भवतीति नार्थो वचनेन ॥

( उद्योतः ) ननु क्रादिसूत्रस्य नियमार्थत्वेन पेचिवेत्यादाविटः सिद्धत्वात्किमनेन वचनेनेत्यत आह—यदोपदेशग्रहणमिति । नाप्येकाच इति विहितविशेषणमित्यपि बोध्यम् । अनेनास्य ग्रन्थस्यैकदेश्युक्तिता सूचिता । एवं च थल्ग्रहणं स्पष्टार्थमिति तत्त्वम् ॥ विध्यर्थमिति । निषेधविध्यर्थमित्यर्थः ॥ आनुपूर्व्येति । पूर्वं द्वित्वे इट्, तत एत्वादीति क्रमेणेत्यर्थः ॥ नार्थो वचनेनेति । 'पचादिभ्य इड्वचनम्'इत्यनेनेति भावः ॥

( अतिव्याप्त्यव्याप्तिदर्शनेनेष्टसाधकभाष्यम् )

इह कस्मान्न भवति-लुलविथ ?

गुणस्य नेति प्रतिषेधात् ।

इहापि तर्हि न प्राप्नोति—पेचिथ, शेकिथ ।

गुणस्य योऽकार इत्येवमेतद्विज्ञायते ।

एवमपि शशरिथ-अत्र प्राप्नोति ।

गुणस्यैषोऽकारः ।

कथम् ?

वृद्धिर्भवति गुणो भवति-इति रेफशिरा गुणवृद्धिसंज्ञको निर्वर्तते ।

**अथवा—**

आचार्यप्रवृत्तिर्ज्ञापयति नैवंजातीयकानामेत्त्वं भवतीति यदयं 'तॄफलभजत्रपश्च' (६।४।१२२) इति तॄग्रहणं करोति ॥

( प्रदीपः ) लुलविथेति । अवादेशे कृते एकहल्मध्यगतोऽकार इत्येत्वप्रसङ्गः । समुदायग्रहणे च लक्षणप्रतिपदोक्तपरिभाषोपतिष्ठते, न वर्णमात्रग्रहणे । न चायमकारो गुणशब्दाभिनिर्वृत्त इति 'न शसदद'इति प्रतिषेधोऽपि नास्तीति प्रश्नः ॥

गुणस्य योकार इति । वैयधिकरण्येन सम्बन्ध आश्रीयते । लुलविथेत्यादावाकारस्यावादेशविधानाद्गुणस्याकार इति प्रतिषेधः प्रवर्तते । पेचिथेत्यादौ तु गुण एवाकारो न तु गुणस्येति प्रतिषेधाभावः ॥

एवमपीति । गुण एवात्राप्यकारो न तु गुणस्येति प्रतिषेधप्रसङ्गः ॥

गुणस्येति । अवयव इत्यर्थः । ऋः स्थानेऽण् प्रसज्यमान एव रपरो भवति पूर्वभक्तश्च रेफ इत्ययं गुणः ॥

( उद्योतः ) नन्वस्याकारस्य लाक्षणिकत्वान्नायं दोषोऽत आह—समुदायेति ॥ नन्वेवं सति 'ओत्' 'कृन्मेजन्तः' इत्यादिसूत्रसमाप्यस्त्वग्रन्थविरोधोऽत आह—न वर्णमात्रेति । तत्रौदन्तो निपात एजन्तः कृदित्यर्थान्न वर्णमात्रग्रहणमिति भावः । तस्मा अनित्यत्वादिति तत्त्वम् ॥ ननु 'न शसदद-'इत्यादिना प्रतिषेधो भविष्यतीत्यत आह—न चायमिति । तत्र गुणशब्दः स्वरूपपरः—'गुण इत्येवं योऽकारः' इति । अन्यथा विधिप्रतिषेधयोरेकविषयत्वाद्विकल्पः स्यादिति भावः ॥ वैयधिकरण्येनेति । गुणशब्दभावितसंबन्ध्यकार इत्यर्थः ॥ अकारस्य गुणसंबन्धित्वं गुणस्य निकावयवत्वेन बोध्यम् ।

व्याख्यानेन च साक्षात्परम्परया वा गुणशब्दभावितसंबन्ध्यकारग्रहणमिति भावः ॥ अयं गुण इति । यदागमन्यायेन विशिष्ट एव गुणादिसंज्ञक इति भावः । एतच्च 'उरण्-'इत्यत्रोपपादितम् । एतेन पेच्चिथेत्यादौ व्यपदेशिवद्भावेन गुणावयवत्वसत्त्वान्निषेधापत्तिरिति निरस्तम्, गुणशब्दभावितसंबन्धीत्यर्थकरणात् ॥

( १३०९ विधिसूत्रम् ॥ ६ । ४ । ३ आ. २२ )

## ३३२१ राधो हिंसायाम् ॥ ६।४।१२३ ॥

( ६५९५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ राधादिषु स्थानिनिर्देशः ॥ * ॥

( भाष्यम् ) राधादिषु स्थानिनिर्देशः कर्तव्यः ॥

( उपसंख्यानानर्थक्यबोधकभाष्यम् )

न कर्तव्यः । 'एकहल्मध्ये' इति वर्तते ।

यद्येवं 'श्रेसतुः' 'श्रेसुः' रशब्दस्यैत्वं प्राप्नोति ।

अस्तु ।

अलोऽन्त्यस्य विधयो भवन्तीति अकारस्य भविष्यति ।

अनर्थकेऽलोऽन्त्यविधिर्नेत्येवं न प्राप्नोति ।

नैतस्याः सन्ति परिभाषायाः प्रयोजनानि ॥

अथवा—

अत इति वर्तते ।

एवमपि राधेर्न प्राप्नोति ।

आकारग्रहणमपि प्रकृतमनुवर्तते ।

क्व प्रकृतम् ?

'श्नाऽभ्यस्तयोरातः' ( ६।४।११२ ) इति ॥

अथवा—

'श्नसोरल्लोपः' ( १११ ) इत्यत्र तपरकरणं प्रत्याख्यायते तत्प्रकृतमिहानुवर्तिष्यते ।

यदि तदनुवर्तते 'अत एकहल्मध्ये नादेशादेर्लिटि' (१२०) अस्य चेति अवर्णमात्रस्यैत्वं प्राप्नोति । वबाधे ।

अकारेण तपरेणाऽवर्णं विशेषयिष्यामः-अस्यात इति । इहेदानीमस्येत्यनुवर्तते, अत इति निवृत्तम् ॥

( प्रदीपः ) राधादिषुस्थानिनिर्देश इति । 'अलोऽन्त्यस्य'इति वचनादेत्वमन्त्यस्य प्राप्नोति–इति 'उपधायाः'इति वक्तव्यमित्यर्थः ॥ अथवा-अत इति । ततो श्रमादीनामेवैत्वमकारस्य भवति ॥

अकारेणेति । समुच्चयेऽत इत्यनर्थकं स्यादिति विशेषणविशेष्यभावाश्रयः ॥

( उद्द्योतः ) श्रमादीनामेवैत्वमकारस्येति । एवो भिन्नक्रमः । अकारस्यैवैत्त्वं नान्यस्येत्यर्थः ॥

( १३१० विधिसूत्रम् ॥ ६ । ४ । ३ आ. २३ )

## ३१२५ अर्वणस्त्रसावनञः ॥६।४।१२७॥

( १३११ विधिसूत्रम् ॥ ६ । ४ । ३ आ. २४ )

## ३१२६ मघवा बहुलम् ॥ ६।४।१२८ ॥

( आदेशाधिकरणम् )

( सूत्रप्रत्याख्याने श्लोकवार्तिकम् )

### अर्वणस्तृ मघोनश्च
### न शिष्यश्छान्दसं हि तत् ।

( भाष्यम् ) अर्वणस्तृ मघोनश्च न शिष्यः ।

किं कारणम् ?

छान्दसं हि तत् । दृष्टानुविधिश्छन्दसि भवतीति ॥

( प्रदीपः ) छान्दसमिति । 'छन्दसीवनिपौ'इति वनिवस्ति, मतुप् चेति प्रत्ययद्वयेन रूपद्वयस्य सिद्धत्वान्नार्थः सूत्रद्वयेन ॥ तत्रैतस्यात्सर्वत्र रूपद्वयप्रसङ्गोऽत आह—दृष्टानुविधिरिति । भाषाशब्दा अपि नियतविषयाः, किं पुनश्छान्दसाः । तत्र ऋ इत्यस्य विनि गुणे कृते 'अर्'इति रूपम् । तस्मान्मतुप्यर्वन्तावित्यादि भवति, वनिप्यर्वण इत्यादि भवति । मघशब्दादपि प्रत्ययद्वये यथाविषयं रूपद्वयं सिद्धम् । एवं चार्वच्छब्दस्य मघवच्छब्दस्य च भाषायां नास्ति प्रयोग इत्युक्तं भवति ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे षष्ठस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ॥

( उद्द्योतः ) ननु च्छान्दसत्वेन प्रत्याख्यानमयुक्तम्, छान्दसेऽपि साधुत्वान्वाख्यानस्य कर्तव्यत्वादत आह—छन्दसीति । वार्तिके 'मतुब्वन्योर्विधानाच्च'इति चो हेताविति तात्पर्यम् ॥ सर्वत्रेति । सावपीत्यर्थः ॥ यद्यपि भाषायामपि दृष्टमेवानुविधीयते तथाऽपि कैमुतिकन्यायप्रदर्शनायेदमुक्तमित्याह—भाषाशब्दा अपीति । यथा वचेरन्तिपरस्य प्रयोगाभाव इति भावः । 'मघोनः' इत्यादौ 'यस्य'इति लोपाभावस्तु च्छान्दसत्वाद्बोध्यः । श्वयुवमघोनामिति निर्देशाद्वा ॥ विचीति । 'अन्येभ्योऽपि दृश्यते' इति विच् ॥ मघशब्दादपीति । मघशब्दो धननाम ॥ अतिप्रसङ्गवारणायाह—यथाविषयमिति ॥ भाषायां नास्ति प्रयोग इति । असिद्धवत्सूत्राद्युक्तस्याव्युत्पन्नप्रातिपदिकरूपस्यापि भाषायां नास्ति प्रयोगः, नियतविषयत्वाच्छब्दानामित्यपि बोध्यम् । भाषायां क्वचिद्दृश्यमानप्रयोगास्तु असाधव एव ॥

( प्रत्याख्याने श्लोकवार्तिकम् )

### मतुब्वन्योर्विधानाच्च

( भाष्यम् ) मतुब्वनी खल्वपि छन्दसि विधीयेते ॥

( प्रत्याख्याने श्लोकवार्तिकम् )

### छन्दस्युभयदर्शनात् ॥

( भाष्यम् ) उभयं खल्वपि छन्दसि दृश्यते ॥

इमान्यर्वणः पदानि । अनर्वाणं वृषभं मन्द्रजिह्वम् ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये षष्ठाध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ॥

( उद्द्योतः ) सूत्रारम्भेऽप्यर्वन्शब्दे 'इमान्यर्वणः' इत्यादौ दृश्यमानत्रभावस्य च्छान्दसत्वेनैव साधनमावश्यकमिति वरं तदकरण-मित्याह भाष्ये—उभयं खल्वपीति । 'अनर्वाणं वृषभं' इति तु दृष्टान्तार्थम्[1]। मघवन्शब्दे सूत्रकृतोऽपि विकल्पस्येष्टत्वेनार्वन्शब्दवि-षयकमेवोदाहरणदानमिति बोध्यम् ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपो-द्योते षष्ठस्याध्यायस्य चतुर्थे पादे तृतीयमाह्निकम् ॥

अथ षष्ठस्य तुरीये तुरीयमाह्निकम् ॥

( १३१२ विधिसूत्रम् ॥ ६ । ४ । ४ आ. २५ )

## ३१२८ पादः पत् ॥ ६ । ४ । १३० ॥

( पदादेशाधिकरणम् )

( ६५९६ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पाद उपधाह्रस्वत्वम् ॥ * ॥

( भाष्यम् ) पाद उपधाह्रस्वत्वं वक्तव्यम् । द्विपदः पश्य ॥

( ६५९७ आदेशे दोषवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ आदेशे हि सर्वादेशप्रसङ्गः ॥ * ॥

( भाष्यम् ) आदेशे हि सति सर्वादेशः प्रसज्येत । सर्वस्य द्विपाच्छब्दस्य त्रिपाच्छब्दस्य च पच्छब्द आदेशः प्रसज्येत "येन विधिस्तदन्तस्य" (१।१।७२) इति ॥

तर्हि वक्तव्यम् ।

( प्रदीपः ) आदेशे हीति । पादन्तस्याङ्गस्य पदादेशो विधीयमानोऽनेकाल्त्वात्सर्वादेशः प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—येन विधिरिति । तया परिभाषया समुदायस्य स्थानित्वादिति भावः ॥

( ६५९८ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ ३ ॥ )

### ॥*॥ न वा निर्दिश्यमानस्यादेशात्[2] ॥*॥

( भाष्यम् ) न वा वक्तव्यम् ।

किं कारणम् ?

निर्दिश्यमानस्यादेशा भवन्तीत्येषा परिभाषा कर्तव्या ॥

कः पुनरत्र विशेषः—एषा वा परिभाषा क्रियते, उपधाह्रस्वत्वं वोच्यते ।

अवश्यमेषा परिभाषा कर्तव्या, बहून्येतस्याः परि-भाषायाः प्रयोजनानि ।

कानि पुनस्तानि प्रयोजनानि[3] ?

( प्रदीपः ) नवेति । यद्यपि पाच्छब्देन तदन्तः समुदायः प्रत्याय्यते तथापि यो निर्दिश्यते यतः षष्ठी श्रूयते तस्यैव 'षष्ठी स्थानेयोगा' इति वचनादादेशो न तु प्रतीयमानस्य । यद्यप्युच्चार्य-माणस्यादेशेन सम्बन्धाभावस्तथाप्यनुकार्यानुकरणयोर्भेदस्यावि-वक्षितत्वादेवमुक्तम् । तत्र यथा 'अलोऽन्त्यस्य' इति वचनात् 'रुहः पः' इत्युक्ते हकारस्य पकारो भवति, एवं पाच्छब्दप्रत्यायित-तदन्तसमुदायावयवस्य पाच्छब्दस्य पदादेशः ॥

( उद्द्योतः ) षष्ठी स्थान इति । इदं हि सूत्रं निर्दिश्यमा-नस्यादेशा इत्यर्थकतया तत्रैव सूत्रे भाष्ये स्थापितम् ॥ यद्यप्यु-च्चार्यमाणस्येति । किंतु तत्प्रत्यायितस्यानुकार्यस्येत्यर्थः ॥ भेदस्या-विवक्षितत्वादिति । सादृश्यमूलिका च तदविवक्षेति ॥ समुदा-यस्य पाच्छब्दस्येति । तदवयवस्य पाच्छब्दस्येत्यर्थः । क्वचित्त-थैव पाठः ॥

( ६५९९ परिभाषाप्रयोजनवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ प्रयोजनं सुसिङादेशेषु ॥ * ॥

( भाष्यम् ) सुप्-कुमार्याम्, किशोर्याम्, खट्वायाम्, मालायाम्, तस्याम्, यस्याम् । आड्याट्स्याट्सु कृतेषु साड्याट्स्याट्कस्य 'आम्' प्राप्नोति ।

निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।

इदमिह संप्रधार्यम्—आड्याट्स्याटः क्रियन्तामा-मिति, किमत्र कर्तव्यम् ?

परत्वादाम् ।

नित्या आड्याट्स्याटः । कृतेऽप्यामि प्राप्नुवन्त्य-कृतेऽपि ।

अनित्या आड्याट्स्याटः ।

कथम् ?

अन्यस्य कृते आमि प्राप्नुवन्त्यन्यस्याकृते । शब्दा-न्तरस्य च प्राप्नुवन् विधिरनित्यो भवति । उभयोर-नित्ययोः परत्वादाम् ॥

इदं तर्हि—यस्यै-तस्यै, स्याटि कृते सस्याट्कस्य स्यैभावः प्राप्नोति ।

निर्दिश्यमानस्यादेशा भवन्तीति न दोषो भवति ।

यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?

स्याटा व्यवहितत्वात् । सुप् ॥

तिङ्—अरुदिताम्, अरुदितम्, अरुदित–इति ।

---

[1] दृष्टान्तार्थमिति । सूत्रे 'अनञः' इत्युपादानादनर्वाणमित्यत्र नञः परत्वात् मादेशाभाव इष्ट एवेति दृष्टान्तार्थमित्युक्तमिति भावः ॥

[2] 'स्यादेशत्वात्' इति च. छ. झ. पाठः ॥

[3] 'पुनस्तानि प्रयोजनानि' इत्यस्य च. छ. पुस्तकयोर्न पाठः ॥

